## अभ्यासः

१. **शुद्धम् उच्चारयत**

युद्धम्, भूषयन्ति, आश्विनशुक्लः, घटस्थापना ।

२. **शुद्धम् लिखत**

विदेशस्थाः, विशेषरूपेण, देवीमन्दिरेषु, दोलाक्रीडनम् ।

३. **अर्थम् लिखत**

गृहाणि, युद्धम्, आभूषणानि, प्रतिवर्षम् ।

४. **संक्षेपेण उत्तरयत**

(क) जनाःअष्टम्याम् नवम्याम् च कुत्र दुर्गायाः पूजनम् कुर्वन्ति ?

(जनाः अष्टम्याम् नवम्याम् च देवीमन्दिरेषु स्वगृहेषु च दुर्गायाः पूजनम् कुर्वन्ति ।)

(ख) श्रीरामचन्द्रस्य विजयदिनम् कदा आसीत् ?

(ग) जनाः विजयादशमीपर्व कस्मिन् समये मानयन्ति ?

(घ) दुर्गायाः विशेषपूजा कदा भवति ?

(ङ) नवपत्रिकामहोत्सवः कदा भवति ?

५. पाठे प्रयुक्तानि पञ्चक्रियापदानि लिखत ।

६. विजयदशम्याः विषये पञ्चवाक्यानि लिखत ।

७. **संस्कृते अनुवादम् कुरुत**

(क) म त्यहाँ जान्छु ।

(ख) तलाउका छेउमा बकुल्लो बस्छ ।

(ग) दशैँमा देवीको पूजा हुन्छ ।

(घ) केटाहरू मान्यजनबाट आशीर्वाद लिन्छन् ।

## निर्देशन

१. वाक्यमा विभिन्न कारकको प्रयोग गरिएको हुन्छ । **छात्रः पठति** । यस वाक्यमा छात्रः कर्ता र पठति क्रिया हुन् । यहाँ कर्मको प्रयोग गरिएको छैन । यसैमा "**छात्रः पाठम् पठति**" भन्दा चाहिँ कर्म **पाठम्** प्रयुक्त भएको छ ।

२. कर्ताले जसलाई ज्यादै चाहन्छ त्यो चाहना गरिएको (व्यक्ति, वस्तु वा क्रिया) कर्म हुन्छ । "**छात्रः पाठम् पठति**" वाक्यमा कर्ता (छात्र) ले खुबै चाहेको छ पाठलाई, त्यसैले "**पाठम्**" कर्म भयो ।

३. कर्ममा द्वितीया विभक्ति हुन्छ (**कर्मणि द्वितीया**) । छात्रः पाठम् पठति वाक्यको पाठम् रूप कर्म कारक द्वितीया विभक्तिको हो । यस्तै **(त्वम्) धर्मम् चर, अहम् ओदनम् खादामि, कर्कटः बकम् मारयति, भटाः उत्सवम् प्रदर्शयन्ति, जनाः आशीर्वादम् गृह्णन्ति, बालकाः वस्त्राणि धारयन्ति** यी वाक्यमा धर्मम्, ओदनम्, बकम्, उत्सवम्, आशीर्वादम्, वस्त्राणि शब्दहरू कर्म बनेका छन् र यी सबै शब्दमा द्वितीया विभक्ति प्रयोग गरिएको छ ।

# राजर्षिः जनकः

प्राचीनकालात् प्रसिद्धा मिथिलानगरी नेपालदेशस्य तराईक्षेत्रे वर्तते । तत्र जनकपुरम् प्रधाननगरी अस्ति । प्राचीनकाले तस्याम् नगर्याम् जनकनामकः राजा राज्यम् अकरोत् । अतः तस्य स्थानस्य नाम "जनकपुरम्" अभवत् । राजा जनकः नेपालस्य विभूतिः अस्ति । जनकः प्रजाम् स्वसन्ततिम् इव अपालयत् । अत एव तस्य "जनक" इति पदम् सार्थकम् अस्ति ।



राजा जनकः धर्मात्मा आसीत् । सः समये-समये यज्ञम् अकरोत् । यज्ञे बहवः महर्षयः समागताः अभूवन् । एकवारम् जनकस्य सभायाम् विदुषाम् ऋषीणां शास्त्रार्थः अभवत् । शास्त्रार्थे याज्ञवल्क्यः सर्वान् अजयत् । प्रसन्नः जनकः तस्मै सुवर्णमण्डिताः सहस्रं गाः अददात्, स्वयम् अपि तस्य शिष्यः अभवत् । याज्ञवल्क्याद् एव सः ब्रह्मज्ञानम् प्राप्तवान् । जनकस्य वास्तविकम् नाम सीरध्वजः आसीत् । राजा भूत्वा अपि सः ऋषितुल्यःआसीत् । अतः सः राजर्षिः कथ्यते ।

जनकस्य रूपवती गुणवती च सीतानाम्नी पुत्री आसीत् । स्वयंवरमहोत्सवे श्रीरामः सर्वान् विजित्य सीतया सह विवाहम् अकरोत् ।



नेपालदेशे जनकः, सीता, रामश्चेति नामानि आदरेण गृह्यन्ते । वयम् एतेषाम् आदर्शम् पालयामः ।

**शब्दार्थाः**

| | | | |
|---|---|---|---|
| प्राचीनकालः | = पुरानो समय | विभूतिः | = गहना |
| स्वसन्ततिः | = आफ्नो सन्तान | सार्थकम् | = अर्थपूर्ण, सार्थक |
| महर्षिः | = ठूला ऋषि | विदुषाम् | = विद्वान्‌हरूको |
| एकवारम् | = एकपल्ट | शास्त्रार्थः | = शास्त्रविषयको छलफल |
| सुवर्णमण्डिताः | = सुनले मढेका | | |
| गाः | = गाईहरू (लाई) | सहस्रम् | = हजार |
| वर्तते | = छ | प्रजा | = जनता |
| अपालयत् | = पालन गरे | आसीत् | = थिए, थियो |
| अभवत् | = भयो, भए | अकरोत् | = गरे, गर्‍यो |
| अददात् | = दिए, दियो | अभूवन् | = भए |
| कथ्यते | = भनिन्छन्, भनिन्छ | प्राप्तवान् | = पाए, पायो |
| पालयामः | = पालन गर्छौं | गृह्यन्ते | = लिइन्छन् |
| वास्तविकम् | = साँचो, वास्तविक | ब्रम्हज्ञानम् | = ब्रम्हज्ञान |
| आदरेण | = आदरपूर्वक | ऋषितुल्यः | = ऋषिसरह |
| स्वयंवरमहोत्सवे | = स्वयंवरको ठूलो उत्सवमा | | |

## अभ्यासः

**१. शुद्धम् लिखत**

राजा जनकः नेपालस्य विभूतिः अस्ति । सः प्रजाम् स्वसन्ततिम् इव अपालयत् ।

**२. शब्दार्थम् लिखत**

सार्थकम्, एकवारम्, सुवर्णमण्डिताः, अददात्, आदरेण ।

**३. संक्षेपेण संस्कृते उत्तरयत**

(क) जनकपुरम् कुत्र अस्ति ? (जनकपुरम् नेपालदेशस्य तराईक्षेत्रे अस्ति ।)

(ख) शास्त्रार्थे कः सर्वान् अजयत् ?

(ग) जनकस्य वास्तविकम् नाम किम् आसीत् ?

(घ) जनकः किमर्थम् "राजर्षिः" कथ्यते ?

(ङ) जनकः कुत्र राज्यम् अकरोत् ?

**४. रिक्तस्थानम् पूरयत**

मिथिलानगरी नेपालदेशस्य ............. वर्तते । ........... तत्र प्रधाननगरी अस्ति । तत्र .............. नामकः राजा राज्यम् अकरोत् ।

**५. अधस्तनशब्दान् वाक्येषु योजयत**

पुत्री, शिष्यः, अभवत्, राजर्षिः, नगरी ।

**६. नेपालीभाषायाम् अनुवादम् कुरुत**

जनकपुरम् प्रधाननगरी अस्ति । तत्र राजा जनकः राज्यम् अकरोत् । जनकः नेपालदेशस्य विभूतिः अस्ति । सः धार्मिकः आसीत् । जनकः याज्ञवल्क्यस्य शिष्यः अभवत् ।

**७. सन्धिम् कुरुत**

धर्म+आत्मा, शास्त्र+अर्थः, कदा+अपि, विद्या+आलयः, भानु+उदयः ।

८. राजर्षेः जनकस्य विषये पञ्च वाक्यानि लिखत ।

## निर्देशन

### गुण-सन्धि

१. अवर्ण (अ अथवा आ अक्षर) देखि पर ह्रस्व या दीर्घ इ, उ, ऋ, लृ वर्ण आए भने गुण सन्धि हुन्छ ।

२. गुण भन्नाले अ, ए, ओ बुझिन्छ । पहिलो शब्दका आखिरमा रहेको अवर्णसँग पछिल्लो शब्दका सुरुको इ, उ, ऋ, लृ वर्णको मेल हुँदा गुणसन्धि हुन्छ । जस्तैः

| | | | | | |
|---|---|---|---|---|---|
| अ | + इ | = ए | सुर | + इन्द्र | = सुरेन्द्रः |
| आ | + इ | = ए | महा | + इन्द्र | = महेन्द्रः |
| अ | + ई | = ए | देव | + ईशः | = देवेशः |
| आ | + ई | = ए | रमा | + ईशः | = रमेशः |
| अ | + उ | = ओ | सूर्य | + उदयः | = सूर्योदयः |
| आ | + ऊ | = ओ | नव | + ऊढा | = नवोढा |
| आ | + उ | = ओ | महा | + उत्सवः | = महोत्सवः |
| आ | + ऊ | = ओ | गङ्गा | + ऊर्मिः | = गङ्गोर्मिः |
| अ | + ऋ | = अ (र्) | राज | + ऋषिः | = राजर्षिः |
| आ | + ऋ | = (र्) | महा | + ऋषिः | = महर्षिः |

इत्यादि ।

सप्तदशः पाठः

# उपायबलम्



एकस्मिन् वृक्षे काकदम्पती निवसतः। तस्य वृक्षस्य कोटरे एकः कृष्णसर्पः अपि निवसति। यदा काकस्य सन्ततिः जायते, तदा सः सर्पः काकस्य सन्ततिं खादति। ततः काकदम्पती विचारयतः - अत्र कः उपायः कार्यः इति। काकी काकं संबोध्य वदति-अमुम् वृक्षं त्यक्त्वा अन्यत्र गच्छावः। परन्तु काकः प्रत्युत्तरयति- "उपायेन कृष्णसर्पः मारणीयः इति।"

ततः काकः उपायं कथयति। निकटस्थिते तडागे राजकुमारी प्रतिदिनं स्नातुम् आगच्छति। सा स्नानाय वस्त्राणि आभूषणानि च अङ्गाद् अवतार्य तडागे प्रविशति। तस्याः सुवर्णहारम् आनीय वृक्षस्य कोटरे स्थापय। ततः हारस्य अन्वेषणे राजपुरुषाः तत्र आगत्य कृष्णसर्पम् मारयन्ति।



काकस्य कथनानुसारं काकी तथा करोति। हारस्य अन्वेषणे वृक्षस्य कोटरे गताः भटाः कृष्णसर्पम् मारयित्वा हारं नयन्ति। अतः उच्यते-



**उपायेन कार्यम् सिध्यति, न तु बलेन।**

**शब्दार्थाः**

| | | | |
|---|---|---|---|
| काकदम्पती | = कागका भालेपोथी | कोटरे | = टोड्कामा |
| कृष्णसर्पः | = कालो सर्प | विचारयतः | = विचार गर्छन् |
| गच्छावः | = जाऔँ | निकटस्थिते | = नजिकै रहेको |
| स्नातुम् | = नुहाउन | आभूषणानि | = गहनाहरू |
| अवतार्य | = फुकालेर (उतारेर) | सुवर्णहारम् | = सुनको हार (सिक्री) |
| स्थापय | = राख | राजपुरुषाः | = सिपाहीहरू |
| कथनानुसारम् | = भनाइबमोजिम | निपातितः | = मारियो |
| त्यक्त्वा | = छोडेर | प्रत्युत्तरयति | = जवाफ दिन्छ |
| प्रविशति | = पस्छ (पस्छिन्) | आनीय | = ल्याएर |
| अन्वेषणे | = खोजीमा | आगत्य | = आएर |
| नयन्ति | = लैजान्छन् | जायते | = हुन्छ, जन्मन्छ |

## अभ्यासः

**१. संक्षेपेण उत्तरयत**

(क) काकदम्पती कुत्र वसतः ? (काकदम्पती वृक्षे वसतः ।)

(ख) कृष्णसर्पः कुत्र वंसति ?

(ग) काकदम्पती किं किं विचारयतः ?

(घ) काकः सर्पमारणाय कम् उपायं कथयति ?

(ङ) राजपुरुषाः किं कुर्वन्ति ?

२. रिक्तस्थानम् पूरयत

(क) काकदम्पती .............. निवसत: । (वृक्षे, कोटरे, स्थले)

(ख) अमुम् .............. त्यक्त्वा अन्यत्र गच्छाव: । (वृक्षम्, कोटरम्, मित्रम्)

(ग) तडागे राजकुमारी प्रतिदिनं .............. आगच्छति । (क्रीडार्थम्, स्नातुम्, स्थातुम्)

(घ) काकी .............. आनयति । (सुवर्णहारम्, आभूषणम्, वस्त्रम्)

(ङ) भटा: ............ नयन्ति । (हारम्, वस्त्रम्, अन्नम्)

३. शुद्धम् उच्चारयत

काकदम्पती, कृष्णसर्प:, सम्बोध्य, त्वक्त्वा, मारणीय:, ।

४. परस्परम् मेलयत

| "अ" समूह : | "आ" समूह : |
|---|---|
| (क) कृष्णसर्प: | (क) सुवर्णहारम् अवतार्य स्नाति । |
| (ख) राजकुमारी | (ख) कृष्णसर्पम् मारयन्ति । |
| (ग) भटा: | (ग) सुवर्णहारं वृक्षकोटरे स्थापयति । |
| (घ) काकी | (घ) वृक्षकोटरे तिष्ठति । |

५. अधोलिखितान् शब्दान् प्रयुज्य वाक्यम् रचयत- (यथा-काक: वृक्षे वसति)

काक:, सन्तति:, सुवर्णहारम्, आभूषणम्, तडाग: ।

६. अधोलिखितेषु वाक्येषु क्रियापदम् दर्शयत

(क) काकस्य सन्तति: जायते ।

(ख) काक: प्रत्युत्तरयति ।

(ग) कृष्णसर्प: मारणीय: ।

(घ) राजकुमारी स्नानाय आगच्छति ।

७. अर्थम् लिखत

सुवर्णहारम्, अन्वेषणे, भटाः, सन्ततिः, अवतार्य ।

८. संस्कृते अनुवादम् कुरुत

(क) कालो सर्प टोड्कामा बस्छ ।

(ख) कागका सन्तान जन्मन्छन् ।

(ग) राजकुमारी नुहाउन आउँछिन् ।

(घ) सुनको हार राख ।

(ङ) काग बुद्धिमान् छ ।

९. उदाहरणम् अनुसृत्य रिक्तस्थानम् पूरयत

| | | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|---|
| (क) शब्दः | | | | |
| काकः | | काकः | काकौ | काकाः |
| | | सर्पः | .......... | .......... |
| | | भटः | .......... | .......... |
| (ख) वस्त्र | | वस्त्रम् | वस्त्रे | वस्त्राणि |
| | | कोटरम् | .......... | .......... |
| | | सुवर्णम् | .......... | .......... |
| (ग) धातुः | वस् | वसति | वसतः | वसन्ति |
| | खाद् | खादति | .......... | .......... |
| | प्र+विश् | प्रविशति | .......... | .......... |

१०. सन्धिविच्छेदम् कुरुत

अन्वेषणम्, स्वागतम्, इत्यादिः, अत्यावश्यकम् ।

## निर्देशन

### यण् सन्धि

१. नजिकका दुई वर्णको मेल भई सन्धि हुन्छ । स्वर, व्यञ्जन र विसर्गसँग सम्बन्धित तीन सन्धि मुख्य छन् ।

२. यहाँ अभ्यासमा यण् सन्धिका उदाहरण दिइएका छन् । यसको नियम यस प्रकार छ-

(क) इ, ई देखि इ, ई बाहेक अन्य स्वरवर्ण पर भएमा इ, ई का स्थानमा 'य्' हुन्छ । जस्तै यदि + अपि = यद्यपि, प्रति + उत्तरम् = प्रत्युत्तम् इत्यादि ।

(ख) उ, ऊ देखि उ, ऊ बाहेक अन्य स्वरवर्ण पर भएमा उ, ऊ का स्थानमा 'व्' हुन्छ । जस्तै सु + आगतम् = स्वागतम्, अनु + एषणम् = अन्वेषणम् ।

(ग) ऋ, ॠ देखि ऋ, ॠ बाहेक अन्य स्वरवर्ण पर भएमा ऋ, ॠ का स्थानमा 'र्' हुन्छ । जस्तै पितृ + अंश: = पित्रंश:

(घ) ऌ देखि ऌ बाहेक अन्य स्वरवर्ण पर भएमा 'ऌ' का स्थानमा 'ल्' हुन्छ । जस्तै ऌ + आकार: = लकार: ।

विचारणीय के छ भने 'र्' 'ल्' को उदाहरण कमै पाइन्छ ।

अष्टादशः पाठः

# उपदेश–पद्यम्

सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखम् ।
सुखं दुःखं मनुष्याणां चक्रवत् परिवर्तते ॥
॥ १ ॥

अष्टादशपुराणेषु व्यासस्य वचनद्वयम् ।
परोपकारः पुण्याय पापाय परपीडनम् ॥
॥ २ ॥

**शब्दार्थाः**

अनन्तरम् = पछि
चक्रवत् = पाङ्ग्रो झैँ
अष्टादश = अठ्ठार
परपीडनम् = अरूलाई दुःख पुऱ्याउनु
अग्रजः = दाजु
परिवर्तते = फेरिन्छ, घुम्छ
परोपकारः = अर्काको भलाइ
वचनद्वयम् = दुईवटा भनाइ (कुरा)
अनुजः = भाइ

**अर्थः**

१. मनुष्यजीवने सुखं दुःखं च क्रमेण आगच्छतः । सुखस्य पश्चात् दुःखम्, दुःखस्य पश्चात् सुखं भवति । सुखदुःखयो क्रमः चक्रतुल्यः भवति । परिवर्तनम् संसारस्य नियमः । (मनुष्यजीवनमा सुख र दुःख पालैसित आउँछन् । सुखपछि दुःख र दुःखपछि सुख रथको पाङ्ग्रो झैँ घुमिरहन्छन् । यस्तो परिवर्तन संसार को नियम हो ।)

२. समस्तेषु अष्टादशपुराणेषु मुनिः व्यासः साररूपेण द्विप्रकारकम्, उपदेशम् अकरोत्, परोपकारः पुण्याय भवति, परपीडनं पापाय भवति । अर्थात् परोपकारेण पुण्यम् भवति, परपीडनेन पापं भवति । सर्वेषाम् पुराणानां सारः अयमेव अस्ति ।

(अठार पुराणमा महर्षि व्यासका दुईवटा कथन छन्- एक परोपकारबाट पुण्य प्राप्त हुन्छ । दुई अर्कालाई कष्ट पुऱ्याउँदा पाप हुन्छ । सबै पुराणको सार यही हो ।)

## अभ्यासः

**१. अधस्तनम् पद्यम् सस्वरम् पठत**

अष्टादशपुराणेषु व्यासस्य वचनद्वयम् ।
परोपकारः पुण्याय पापाय परपीडनम् ॥

**२. संक्षेपेण उत्तरयत**

(क) सुखस्य अनन्तरं किम् आगच्छति ? (सुखस्य अनन्तरं दुःखम् आगच्छति)

(ख) सुखदुःखयोः परिवर्तनं कथम् भवति ?

(ग) अष्टादशपुराणानां सारः कः अस्ति ?

(घ) पुण्यप्राप्तये किं कर्तव्यम् ?

(ङ) परपीडनस्य कः परिणामः भवति ?

**३. रिक्तस्थानम् पूरयत**

(क) सुखम् दुःखं च .................... परिवर्तते ।

(ख) सुखस्य अनन्तरं .................. आगच्छति ।

(ग) परोपकारेण .................. भवति ।

(घ) .................... पापं भवति ।

**४. शुद्धस्थले (√) चिह्नम्, अशुद्धस्थले (X) चिह्नम् दत्त**

(क) मनुष्यजीवने सुखं दुःखं वा निरन्तरम् आगच्छतः ( )

(ख) दुःखस्य पश्चात् दुःखम् आयाति । ( )

(ग) सुखदुःखयोः क्रमः चक्रतुल्यः भवति । ( )

(घ) पुण्याय परोपकारः कर्तव्यः ( )

(ङ) परपीडनेन पुण्यं भवति । ( )

५. परस्परम् मेलयत

| "अ" समूहः | "आ" समूहः |
|---|---|
| (क) व्यासः | (क) परिवर्तते |
| (ख) परोपकारः | (ख) पापम् |
| (ग) चक्रम् | (ग) पुराणम् |
| (घ) परपीडनम् | (घ) पुण्यम् । |

६. वाक्येषु प्रयोगम् कुरुत

मनुष्यजीवनम्, चक्रम्, वचनम्, व्यासः, सुखम्, परोपकारः ।

७. अधस्तनपद्यस्य नेपालीभाषायाम् भावार्थम् लिखत

सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखम् ।
सुखं दुःखं मनुष्याणां चक्रवत् परिवर्तते ॥

८. सन्धिविच्छेदम् कुरुत

दुःखस्यानन्तरम्, गणेशः, परोपकारः, विद्यालयः ।

## निर्देशन

**लिङ्गव्यवस्था**

१. संस्कृतमा तीन लिङ्ग पुंलिङ्ग, स्त्रीलिङ्ग र नपुंसक लिङ्ग छन् । अन्य भाषामा झैँ शारीरिक बनोटका आधारमा नभएर प्रचलित व्याकरणका आधारमा संस्कृत भाषाको लिङ्ग व्यवस्था कायम भएको छ । जस्तै-

पुंलिङ्ग-उपकारः, मनुष्यः, ओष्ठः, हस्तः, अग्रजः, अनुजः, छात्रः, मञ्चः, वृक्षः, पुत्रः । स्त्रीलिङ्ग-लता, माला, नासिका, भगिनी, छात्रा, लेखनी, पूजा, शिला, कदली, सेविका ।

नपुंसकलिङ्ग-वनम्, शरीरम्, नेत्रम्, मुखम्, जलम्, कमलम्, छत्रम्, दधि, सुखम्, दुःखम्, वचनम् ।

ऊनविंश: पाठ:

# मातापुत्रयोः वार्तालापः

मनमाया - पुत्र रत्नलाल अधुना त्वम् किम् करोषि ?

रत्नलाल: - मात: ! अमृतमानेन सह खेलामि ।

मनमाया - राममान: किम् करोति ?

रत्नलाल: - राममान: अपि अत्र खेलति । आवाम् खेलाव: ।

मनमाया - न खेल, त्वम् अत्र आगच्छ । अमृतमानम् राममानम् च आनय ।

रत्नलाल: - वयम् सर्वे आगच्छाम: !



मनमाया - आगच्छत, अत्र आसने वसत । महानसे दुग्धम् अस्ति । तत् दुग्धम् शीतम् अस्ति । उष्णम् कृत्वा अहम् आनयामि । तावत् परस्परम् वार्तालापम् कृत्वा वसत ।

रत्नलाल: - मात: ! भवती किमर्थम् भ्रातरम्, भगिनीम् च सदा दुग्धपानाय प्रेरयति ?

मनमाया - आम्, दुग्धम् शरीरस्य पोषणाय भवति ।

रत्नलालः - तर्हि अहम् अपि सदा दुग्धम् पिवामि ।
मनमाया - फलानि अपि शरीरम् पोषयन्ति ।
रत्नलालः - मातः, अन्यानि कीदृशानि खाद्यवस्तूनि पौष्टिकानि भवन्ति ।
मनमाया - दधि, घृतम्, पायसम्, फलानि, शाकादीनि व्यञ्जनानि पौष्टिकानि भवन्ति ।
रत्नलालः - एतादृशानि खाद्यवस्तूनि अहम् खादामि, मित्राणि च प्रेरयामि ।

**शब्दार्थाः**

| | | | |
|---|---|---|---|
| आसने | = बस्ने ठाउँमा, आसनमा | उष्णम् | = तातो |
| शीतम् | = चिसो | आनय | = ल्याऊ |
| आगच्छ | = आऊ | वसत | = बस |
| आगच्छत | = आओ | प्रेरयति | = प्रेरणा दिनुहुन्छ |
| आनयामि | = ल्याउँछु | तावत् | = त्यति वेरसम्म |
| वार्तालापम् | = कुराकानी | कृत्वा | = गरेर |
| भवती | = हजुर (स्त्री) | महानसे | = भान्सामा |
| भ्रातरम् | = भाइ (लाई) | भगिनीम् | = बहिनी (लाई) |
| दुग्धपानाय | = दूध खान | आम् | = अँ, हो |
| पोषणाय | = पोस्नका लागि | तर्हि | = त्यसो भए |
| अन्यानि | = अरू | कीदृशानि | = कस्ता |
| खाद्यवस्तूनि | = खाने चीजहरू | पौष्टिकानि | = पोसिला |
| घृतम् | = घिउ | पायसम् | = खीर |
| अधुना | = अहिले | एतादृशानि | = यस्ता |
| शाकादीनि | = साग आदि | पोषयन्ति | = पोसिलो पार्दछन् |
| मित्राणि | = मित्र (साथी) हरू | | |

## अभ्यासः

१. **शुद्धम् उच्चारयत**

खाद्यवस्तूनि, व्यञ्जनानि, पौष्टिकानि, आगच्छ ।

२. **नेपालीभाषायाम् अर्थम् लिखत**

महानसे, शीतम्, उष्णम्, तर्हि, किमर्थम् ।

३. पाठे प्रयुक्तानि पञ्चक्रियापदानि लिखत ।

४. पौष्टिकपदार्थानाम् पञ्चनामानि लिखत ।

५. **संक्षेपेण उत्तरयत**

(क) अमृतमान: किम् करोति ? (अमृतमान: खेलति ।)

(ख) दुग्धम् कीदृशम्, अस्ति ?

(ग) पौष्टिकानि खाद्यवस्तूनि कानि सन्ति ?

(घ) दुग्धम् कीदृशम् अस्ति ?

६. **रिक्तस्थानम् पूरयत**

(क) ................. सर्वे आगच्छाम: । (वयम्, यूयम्, आवाम्)

(ख) ................. दुग्धम् अस्ति । (महानसे, उपवने, भवने)

(ग) फलानि अपि............. पोषयन्ति । (शरीरम्, हृदयम्, चित्तम्)

७. **संस्कृते अनुवादम् कुरुत**

(क) राममान खेल्छ ।

(ख) म दूध पिउँछु ।

(ग) सागहरू पोसिला हुन्छन् ।

(घ) खीर मीठो हुन्छ ।

## निर्देशन

**वचन व्यवस्था / द्विवचनको प्रयोग**

१. संस्कृतमा तीन वचन छन् - एकवचन, द्विवचन र बहुवचन । द्विवचनको प्रयोग संस्कृतको विशेषता हो ।

२. एउटालाई बुझाउँदा एकवचन, दुइटालाई बुझाउँदा दुईवचन र तीनवटा अथवा त्यसभन्दा बढी जतिसुकैलाई बुझाउँदा पनि बहुवचनको प्रयोग गरिन्छ ।

३. कर्ता दुई जना भई द्विवचनको प्रयोग भएमा कर्ताअनुसार क्रियाको पनि द्विवचनमै प्रयोग गर्नुपर्दछ, तर कर्म द्विवचन छ भने कर्तृवाच्यमा क्रियापदमा कुनै असर पर्दैन । कर्म वाक्यमा कर्म अनुसारै क्रियाको रूप चल्ने हुनाले द्विवचनात्मक कर्ममा चाहिँ द्विवचनकै क्रियाको प्रयोग गर्नुपर्दछ । एकवचन, द्विवचन र बहुवचन कर्ता भएका केही प्रचलित क्रियापदका प्रयोग यस प्रकार छन्-

| | **एकवचन** | **द्विवचन** | **बहुवचन** |
|---|---|---|---|
| पठ् प्रथमपुरुष | छात्रः पठति | छात्रौ पठतः | छात्राः पठन्ति |
| गम् (प्र.पु.) | सः गच्छति | तौ गच्छतः | ते गच्छन्ति । |
| पठ् मध्यम पुरुष | त्वम् पठसि | युवाम् पठथः | यूयम् पठथ |
| वद् ,, | त्वम् वदसि | युवाम् वदथः | यूयम् वदथ |
| हस् उत्तम पुरुष | अहम् हसामि | आवाम् हसावः | वयम् हसामः |
| खेल् ,, | अहम् खेलामि | आवाम् खेलावः | वयम् खेलामः |

विंशः पाठः

# उपदेश-पद्यम्

**सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः ।**
**सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखभाग्जनः ॥**

(१)

**परोक्षे कार्यहन्तारं प्रत्यक्षे प्रियवादिनम् ।**
**वर्जयेत् तादृशं मित्रं विषकुम्भं पयोमुखम् ॥**

(२)

१. **अर्थः** अस्मिन् संसारे सर्वे जनाः सुखयुक्ताः भवन्तु । सर्वे जनाः निरोगिणः सन्तु, सर्वे कल्याणम् पश्यन्तु, कश्चिद् अपि दुःखम् न प्राप्नुयात् ।

(यस संसारमा सबै मानिसहरू सुखी होऊन् । सबै निरोगी होऊन् । सबैलाई कल्याण होस् । कसैलाई पनि दुःख नहोस्)

२. **अर्थः** परोक्षे कार्यविनाशकम्, अग्रे मिष्ठभाषिणम्, मुखे दुग्धेन युक्तम्, अन्तः विषेण परिपूरितम् घटम् इव तादृशम् मित्रम् वर्जयेत् । (पछाडि काम बिगार्ने र आफ्नो सामुमा मुखले ठिक्क पार्ने त्यस्तो मित्र (साथी) लाई भित्र विषले भरिएको र मुखमा चाहिँ दूध भएको गाग्रोलाई झैँ छाडिदिनुपर्दछ ।)

**शब्दार्थाः**

| | | | |
|---|---|---|---|
| सर्वे | = सबै | सुखिनः | = सुखी (बहुवचन) |
| निरामयाः | = निरोगी (बहुवचन) | भद्राणि | = कल्याण (बहुवचन) |
| कश्चिद् | = कोही पनि | दुःखभाग् | = दुःखको भागी, दुःखी |
| मा (भवतु) | = न होऊन् | भवन्तु | = होऊन् |
| सन्तु | = होऊन् | पश्यन्तु | = देखून् |
| परोक्षे | = अनुपस्थितमा, पछाडि | कार्यहन्तारम् | = काम बिगार्नेलाई |
| प्रत्यक्षे | = सामुन्नेमा | प्रियवादिनम् | = मनपर्ने कुरा बोल्नेलाई |

| | | | |
|---|---|---|---|
| तादृशम् | = त्यस्तो | मित्रम् | = मीत, साथी (लाई) |
| पयोमुखम् | = मुखमा दूध भएको | विषकुम्भम् | = विषको गाग्रोलाई |
| वर्जयेत् | = छाडोस्, छाड्नुपर्छ | | |

## अभ्यासः

**१. शुद्धम् उच्चारयत**

सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः ।
सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखभाग्जनः

**२. शुद्धम् लिखत**

परोक्षे कार्यहन्तारं प्रत्यक्षे प्रियवादिनम्
वर्जयेत्तादृशं मित्रं विषकुम्भं पयोमुखम् ।

**३. नेपालीभाषायाम् अर्थम् लिखत**

सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः ।
सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखभाग्जनः।

**४. परस्परम् मेलयत**

| | |
|---|---|
| (क) सर्वे भवन्तु । | (क) भद्राणि |
| (ख) सर्वे पश्यन्तु | (ख) सुखिनः |
| (ग) दुःखभाग्जनः | (ग) कार्यहन्तारम् |
| (घ) परोक्षे | (घ) मा कश्चिद् |

**५. रिक्तस्थानम् पूरयत**

(क) सर्वे सन्तु .................... । (निरामयाः, दुखिनः)
(ख) ................... प्रियवादिनम् । (परोक्षे, प्रत्यक्षे)
(ग) पयोमुखम् ............... इव मित्रम् वर्जयेत् । (विषकुम्भम्, जलघटम्)

**६. संक्षेपेण उत्तरयत**

(क) दुष्टमित्रम् परोक्षे किम् करोति ? (दुष्टमित्रम् परोक्षे कार्यम् नाशयति)
(ख) कीदृशम् मित्रम् त्याज्यम् ?
(ग) के सुखिनः भवन्तु ?
(घ) के निरामयाः सन्तु ?

७. पाठे पठितम् श्लोकद्वयम् कण्ठस्थम् श्रावयत ।

## निर्देशन

**अकारान्त नपुंसक लिङ्ग**

१. संस्कृत भाषाको लिङ्ग व्यवस्था व्याकरणमा निर्धारित छ भन्ने कुरा पहिले बताइसकिएको छ । त्यसैले पुरुष साथी अर्थ बुझाउने 'मित्र' शब्द नपुंसक लिङ्गमा छ भने स्त्री अर्थ बुझाउने 'कलत्र' शब्द पनि नपुंसक लिङ्गमा छ । अर्कातिर नेपाली, अङ्ग्रेजी आदि भाषामा खाट अथवा मेच, कोठा, कलम आदि नपुंसक लिङ्गको अर्थ दिने शब्दहरू संस्कृतमा खट्वा, लेखनी स्त्रीलिङ्गमा तथा मञ्चः, कोष्ठः शब्द चाहिं पुंलिङ्गमा प्रयोग गरिन्छन् । लिङ्ग ठम्याउने मुख्य उपाय अभ्यास नै हो ।

२. अकारान्त नपुंसक लिङ्गका शब्दहरूको रूप प्रथमा र द्वितीया विभक्तिमा बाहेक अरू विभक्तिमा अकारान्त पुंलिङ्ग शब्दसरह नै चल्दछन् । जस्तै - फलशब्दका रूप-

| विभक्ति / वचन | एकवचन | द्विवचन | बहुवचन |
|---|---|---|---|
| प्रथमा | फलम् | फले | फलानि |
| द्वितीया | फलम् | फले | फलानि |
| तृतीया | फलेन | फलाभ्याम् | फलैः |
| चतुर्थी | फलाय | फलाभ्याम् | फलेभ्यः |
| पञ्चमी | फलात्-द् | फलाभ्याम् | फलेभ्यः |
| षष्ठी | फलस्य | फलयोः | फलानाम् |
| सप्तमी | फले | फलयोः | फलेषु |
| सम्बोधन | हे फलम् | हे फले | हे फलानि |

यसैगरी वनं, पत्र, छत्र, मित्र, सुख, दुःख, वचन, दिन, वस्त्र, भूषण, जीवन, पूजन, पुष्प, पुर, नगर, ज्ञान, मुख, नेत्र, कमल आदि शब्दका रूप चल्दछन् ।

एकविंशः पाठः

# अनुशासनम्

जीवने अनुशासनस्य वहु महत्त्वम् अस्ति । विशेषेण छात्राणाम् कृते अनुशासनम् आवश्यकम् अस्ति । अनुशासनम् विना ज्ञानम् न भवति । ज्ञानेन विना शिक्षायाः महत्त्वम् नास्ति ।

स्वयम् एव नियमे अवस्थानम् अनुशासनम् कथ्यते । अतः अनुशासनपदेन नियमपालनम् इति बुध्यते ।

अनुशासने स्थितः जनः सर्वेषाम् प्रियः भवति । सर्वे जनाः तम् अनुसरन्ति । यः अनुशासनम् पालयति सः अनुशासितः कथ्यते ।

केवलम् अध्ययने अनुशासनस्य महत्त्वम् नास्ति, समाजसेवायाम्, सर्वकार सेवायाम्, क्रीडाक्षेत्रे, गार्हस्थ्यजीवने च अस्य अतीव महत्त्वम् अस्ति । मान्यजनस्य आज्ञापालनम् अपि अनुशासनम् भवति । यः मान्यजनस्य आज्ञाम् न पालयति सः निन्दितः भवति । अनुशासनम् विना व्यवहारे कार्यम् न चलति । समाजस्य उत्थानाय अपि अनुशासनम् आवश्यकम् भवति । वस्तुतः अनुशासनम् समाजस्य सभ्यतायाश्च विकासम् सूचयति ।

अनुशासनस्य अभावे अव्यवस्था भवति । विद्यालये शिक्षकाः अनुशासनम् शिक्षयन्ति, कार्यालये अधिकारिणः शिक्षयन्ति । समाजे समाजसेवकाः नेतारश्च अनुशासनम् शिक्षयन्ति । ते स्वयम् अनुशासने तिष्ठन्ति । अतः तेषाम् व्यवहारेण अन्ये जनाः अनुशासनम् जानन्ति, पालयन्ति च ।

यः अनुशासने स्वयं न तिष्ठति, तस्य आदेशम् अन्यः कश्चिदपि न पालयति । अतः श्रेष्ठः जनः स्वयम् एव अनुशासने स्थित्वा अन्यान् अनुशासनपालनाय प्रेरयति ।

**शब्दार्थाः**

| | | | |
|---|---|---|---|
| जीवने | = जीवनमा | अनुशासनम् | = नियम, अनुशासन |
| समाजसेवायाम् | = समाजसेवामा | गार्हस्थ्यजीवने | = गृहस्थी जीवनमा |
| सर्वकारसेवायाम् | = सरकारी सेवामा | निन्दितः | = निन्दा गरिएको |
| अवस्थानम् | = बस्नु | उत्थानाय | = उठाउन |
| अधिकारिणः | = अधिकारीहरू | नेतारः | = नेताहरू |
| बुध्यते | = बुझिन्छ | केवलम् | = खालि |
| अनुसरन्ति | = अनुसरण गर्छन्, पछि लाग्छन् | सूचयति | = सूचना दिन्छ |
| | | श्रेष्ठः | = असल |
| पालयति | = पालना गर्दछ | शिक्षयन्ति | = शिक्षा दिन्छन् |

## अभ्यासः

१. **शुद्धम् उच्चारयत**

अनुशासनम्, महत्त्वम्, बुध्यते, अनुसरन्ति, विद्यालये ।

२. **शुद्धम् लिखत**

अनुशासनम्, अतीव, सूचयति, शिक्षयन्ति, श्रेष्ठः, अध्ययने ।

३. **अर्थम् लिखत**

शिक्षयन्ति, गार्हस्थ्यजीवने, उत्थानाय, अनुशासितः, अनुसरन्ति ।

४. **रिक्तस्थानम् पूरयत**

(क) जीवने अनुशासनस्य .................... महत्त्वम् अस्ति ।

(बहु, स्वल्पतरम्, न्यूनम्)

(ख) स्वयम् एव नियमे .............. अनुशासनम् कथ्यते ।

(अवस्थानम्, अनुकरणम्, अवधानम्)

(ग) यः मान्यजनस्य आज्ञाम् न पालयति सः .............. भवति ।

(पूजितः, निन्दितः, बोधितः)

(घ) अनुशासनस्य अभावे .............. भवति ।

(सुव्यवस्था, सद्व्यवस्था, अव्यवस्था)

**५. परस्परम् मेलयत**

| | |
|---|---|
| (क) अनुशासनम् विना | (क) नियमपालनम् इति बुध्यते । |
| (ख) अनुशासनपदेन | (ख) अनुशासनम् आवश्यकम् । |
| (ग) समाजस्य उत्थानाय | (ग) विकासम् सूचयति । |
| (घ) अनुशासनम् समाजस्य | (घ) ज्ञानम् न भवति । |

**६. संक्षपेण उत्तरयत**

(क) अनुशासनम् किम् अस्ति ? (अनुशासनम् नियमपालनम् अस्ति ।)

(ख) कस्मिन् कस्मिन् क्षेत्रे अनुशासनस्य महत्त्वम् ?

(ग) अनुशासनस्य अभावे कीदृशी स्थितिः भवति ?

(घ) विद्यालये अनुशासनम् के शिक्षयन्ति ?

**७. अनुवादम् कुरुत**

(क) अहम् छात्रः अस्मि ।

(ख) वयम् अनुशासनम् पालयामः

(ग) विद्यार्थिजीवने अनुशासनस्य बहु महत्त्वम् अस्ति ।

(घ) विद्यालये शिक्षकाः अनुशासनम् शिक्षयन्ति ।

(ङ) गृहे माता अनुशासनम् शिक्षयति ।

८. अनुशासनस्य विषये पञ्चवाक्यानि लिखत ।

## निर्देशन

**अव्यय शब्द**

१. शब्दको विभाजन दुई किमिसले गर्न सकिन्छ
   (क) विकारी (ख) अविकारी

२. विभक्ति, वचन र लिङ्ग अनुसार रूप फेरिने शब्दलाई विकारी शब्द भनिन्छ भने सधैं एकनास रहने शब्दलाई अविकारी भनिन्छ। विकारी शब्द भन्नाले पुंलिङ्ग, स्त्रीलिङ्ग, नपुंसक लिङ्गका शब्द र अविकारी भन्नाले अव्यय शब्द बुझ्नुपर्दछ ।

३. अव्यय अर्थात् अविकारी शब्दको रूप चल्दैन । रूप वा आकारमा फेरबदल नहुने भएकाले यस्ता शब्दलाई अव्यय शब्द भनिएको हो । जस्तै-

   **सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु ।**

   **वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ।**

४. केही प्रचलित अव्यय शब्दको सूची यस प्रकार छ:-

   च, अपि, किन्तु, परन्तु, यद्यपि, तथापि, सदा, सर्वदा, तथा, कदा, यदा, यत्र, तत्र, सर्वत्र, अत्र, कुत्र, एवम्, हि, नु, एवम्, आम्, अधुना, सम्प्रति, सह, खलु, इति, अथ, अतीव ।

द्वाविंशः पाठः

# हिमालयः



नेपालस्य उत्तरदिशि हिमालयः वर्तते । सः हिमेन आच्छादितः भवति । तत्र अतीव शैत्यम् भवति । प्रायेण तस्मिन् स्थाने शेर्पाजातिः वसति । चमरीगावः, मेषाः, अजाः, घोटकाः तत्र भवन्ति । तत्रत्यानाम् जनानाम् व्यवसायः पर्यटनम्, पशुपालनम् चापि अस्ति । तत्रत्याः जनाः हिमालयस्य आरोहणे पर्यटकानाम् सहयोगम् कुर्वन्ति ।

हिमालयम् द्रष्टुम् विदेशेभ्यः पर्यटकाः आगच्छन्ति । हिमालये विविधानि बहुमूल्यानि औषधानि भवन्ति । नदीनाम् उद्गमस्थलम् हिमालयः वर्तते, हिमालयस्य नाम्ना एव नेपालः प्रसिद्धः वर्तते । "सगरमाथा" सर्वोच्चम् शिखरम् अस्ति । हिमालयक्षेत्रे यातायातस्य काठिन्यम् वर्तते । नेपाले बहवः हिमालयाः सन्ति । तस्मात् कारणात् अधिकाः नद्यः सन्ति । अतः जलस्रोतसः क्षेत्रे नेपालदेशः धनी अस्ति ।

हिमालयः प्राकृतिकरूपेण सुन्दरः अस्ति । हिमालयस्य क्षेत्रे दुर्लभाः जीवजन्तवः भवन्ति । हिमालयक्षेत्रे दुग्धकुण्डम्, नीलकुण्डम्, मुक्तिक्षेत्रम् च प्रसिद्धानि तीर्थस्थलानि वर्तन्ते । हिमालयः नेपालस्य गौरवम् अस्ति ।

**शब्दार्थाः**

| | | | |
|---|---|---|---|
| आच्छादितः | = ढाकिएको | चमरीगावः | = चौंरीगाईहरू |
| मेषाः | = भेडाहरू | आरोहणे | = चढ्नका लागि |
| तत्रत्याः | = त्यहाँका | पर्वताः | = पहाडहरू |
| हिमेन | = हिउँले | उज्वलाः | = उज्याला |
| विविधानि | = धेरै प्रकारका | बहूमूल्यानि | = धेरै मोल पर्ने |
| औषधानि | = ओखतीहरू | उद्गमस्थलम् | = निक्लने ठाउँ, मुहान |
| सर्वोच्चम् | = सबैभन्दा अग्लो | कस्तूरमृगाः | = कस्तूरी मृगहरू |
| सरलाः | = सोझा (बहुवचन) | परिश्रमिणः | = मिहिनेती |
| कुण्डम् | = कुण्ड | काठिन्यम् | = कठिनाइ |
| दुग्धकुण्डम् | = दूधकुण्ड | नीलकुण्डम् | = गोसाईंकुण्ड |
| अतीव | = ज्यादै | प्रायेण | = धेरैजसो |
| जीवजन्तवः | = जीव र जन्तुहरू | नद्यः | = नदीहरू |

## अभ्यासः

**१. शुद्धम् उच्चारयत**

आच्छादितः, चमरीगावः, विविधानि, बहुमूल्यानि ।

**२. अर्थम् लिखत**

आच्छादितः, आरोहणे, उद्गमस्थलम्, कस्तूरमृगाः ।

**३. संस्कृते उत्तरयत**

(क) हिमालयः कुत्र वर्तते ? (हिमालयः नेपालस्य उत्तरदिशि वर्तते ।)

(ख) हिमालयवासिनाम् कः व्यवसायः ?

(ग) नदीनाम् उद्गमस्थलम् कुत्र अस्ति ?

(घ) प्रसिध्दानि तीर्थस्थानानि कुत्र वर्तन्ते ?

४. **रिक्तस्थानम् पूरयत**

(क) जना: हिमालयस्य .......... पर्यटकानाम् सहयोगम् कुर्वन्ति । (आरोहणे, गमने, निष्कासने)

(ख) हिमालयवासिन: जना: .......... भवन्ति । (उन्नता:, सरला:, वक्रा:)

(ग) नेपाले .................. हिमालया: सन्ति । (बहव:, न्यूना:, स्वल्पा:)

५. **परस्परम् मेलयत**

| | |
|---|---|
| (क) पर्वता: हिमेन | (क) सुन्दर: अस्ति |
| (ख) कस्तूरमृगा: | (ख) उज्वला: भवन्ति |
| (ग) हिमालय: प्राकृतिकरूपेण | (ग) सर्वोच्चशिखरम् अस्ति |
| (घ) सगरमाथा | (घ) हिमालये भवन्ति |

६. पञ्चपङ्क्तौ हिमालयस्य वर्णनम् कुरुत ।

७. त्रयाणां तीर्थस्थलानाम् नामानि लिखत ।

८. **संस्कृतभाषायाम् अनुवादम् कुरुत**

(क) नेपालमा हिमालय छ ।

(ख) हिमालयमा तीर्थस्थान छन् ।

(ग) नेपालका मान्छे परिश्रमी छन् ।

(घ) हिमालय नेपालको गौरव हो ।

> अर्धो घटो घोषमुपैति नूनम्
> (आधा (नभरिएको) गाग्रो ज्यादा आवाज गर्दछ ।)

त्रयोविंशः पाठः

# विद्या-महिमा

(१)

विद्या ददाति विनयं विनयाद् याति पात्रताम्
पात्रत्वाद्धनमाप्नोति धनाद्धर्मं ततः सुखम् ॥

(२)

दिवा पश्यति नोलूकः काको नक्तं न पश्यति
विद्याविहीनो मूढस्तु दिवा नक्तं न पश्यति ॥

(३)

किं कुलेन विशालेन विद्याहीनस्य देहिनः
अकुलीनोऽपि विद्यावान् देवैरपि स पूज्यते ॥

(४)

सरस्वती मुखे यस्य, भवेत् तस्य वशे जगत् ।
मधुरा तस्य रसना हृदयं च प्रकाशते ॥

(१)

**अन्वयः** - विद्या विनयं ददाति । विनयात् (जनः) पात्रताम् याति । पात्रत्वात् धनम् आप्नोति । धनात् धर्मम् (भवति) ततः सुखम् (भवति) ।

**अर्थः**- ज्ञानेन नम्रता भवति । नम्रतायाः (जनः) सत्पात्रताम् गच्छति । सत्पात्रतायाः धनम् अर्जयति, धनात् धर्मम् भवति । ततः (जनः) सुखम् प्राप्नोति । **(विद्याबाट मानिसमा नम्रता हुन्छ । नम्रता भएपछि (मानिस) सत्पात्र हुन जान्छ । असल मानिस भएपछि धन कमाउँछ । धनबाट धर्म गर्न सक्छ । त्यसपछि सुख हुन्छ ।)**

(२)

**अन्वयः** दिवा उलूकः न पश्यति, काकः नक्तं न पश्यति, विद्याविहीनः मूढः तु दिवा नक्तं न पश्यति ।

**अर्थः** दिवसे उलूकः न पश्यति, काकः रात्रौ न पश्यति, विद्याविहीनः मूढः जनः दिवसे रात्रौ च न पश्यति । अर्थात् विद्याविहीनस्य जनस्य कृते सर्वम् जगत् सदा अन्धकारमयम् भवति ।

**(लाटोकोसेराले दिउँसो मात्र देख्तैन भने कागले राती मात्र देख्तैन । ज्ञान नभएको मान्छेले चाहिँ रात र दिन दुवै समय आँखा देख्तैन । यसैले उसका लागि संसार सधैँ अन्धकारमय हुन्छ ।)**

(३)

**अन्वयः** विद्याहीनस्य देहिनः विशालेन कुलेन किम् ? सः विद्यावान् अकुलीनः अपि देवैः अपि पूज्यते ।

**अर्थः** विद्यारहितस्य जनस्य महता कुलेन अपि किम् प्रयोजनम् ? यः जनः विद्यावान् भवतिः सः अकुलीनः अपि सर्वैः आद्रियते ।

(विद्या छैन भने ठूलो कुलमा जन्मेर मात्र त्यसको के प्रयोजन ? सानो कुलमा जन्मेर पनि ज्ञानवान् छ भने त्यसको आदर गरिन्छ ।)

(४)

**अन्वयः** यस्य मुखे सरस्वती भवेत्, तस्य वशे जगत् (भवति) । तस्य रसना मधुरा, हृदयम् च प्रकाशते ।

**अर्थः** यस्य मानवस्य मुखे सरस्वती (विद्या) भवति, तस्य जनस्य अधीने संसारः भवति । तस्य वाणी मधुरा भवति, मनः प्रकाशमयम् भवति ।

**(जसका मुखमा सरस्वती अर्थात् विद्या हुन्छ त्यसका अधीनमा संसार हुन्छ । उसको बोली वचन पनि सुमधुर हुन्छ र मन पनि उज्यालो हुन्छ ।)**

**शब्दार्था:**

| | | | | | |
|---|---|---|---|---|---|
| पात्रताम् | = | असलपन | विनयम् | = | नम्रता |
| धर्मम् | = | धर्म | धनम् | = | धन |
| भवेत् | = | होला | ततः | = | त्यसपछि |
| याति | = | जान्छ | ददाति | = | दिन्छ |
| दिवा | = | दिउँसो, दिन | आप्नोति | = | पाउँछ |
| नक्तम् | = | राति | उलूकः | = | लाटोकोसेरो |
| मूढः | = | मूर्ख | विद्याहीनस्य | = | विद्या नभएकाको |
| पश्यति | = | देख्छ, हेर्छ | विशालेन | = | ठूलो |
| देहिनः | = | प्राणी (मनुष्य) को | विद्यावान् | = | विद्या (ज्ञान) सम्पन्न |
| कुलेन | = | कुल या वंशले | पूज्यते | = | पूजा गरिन्छ, आदर गरिन्छ |
| अकुलीनः | = | सानु कुलको | | | |
| देवैः | = | देउताहरूद्वारा | मुखे | = | मुखमा |
| यस्य | = | जसका | जगत् | = | संसार |
| वशे | = | अधीनमा | रसना | = | जिब्रो |
| तस्य | = | त्यसको | हृदयम् | = | मन |
| मधुरा | = | मीठो | प्रकाशते | = | उज्यालो हुन्छ |

## अभ्यासः

**१. शुद्धम् उच्चारयत**

विद्या ददाति विनयं विनयाद्याति पात्रताम्
पात्रत्वाद्धनमाप्नोति धनाद् धर्मं ततः सुखम् ॥

**२. शुद्धम् लिखत**

किं कुलेन विशालेन विद्याहीनस्य देहिनः,
अकुलीनो ऽपि विद्यावान् देवैरपि स पूज्यते ॥

**३. नेपालीभाषायाम् अर्थम् लिखत**

सरस्वती मुखे यस्य भवेत् तस्य वशे जगत् ।
मधुरा तस्य रसना, हृदयं च प्रकाशते ॥

४. "दिवा पश्यति नोलूकः" इति श्लोकस्य अन्वयम् कुरुत ।

५. "विद्या ददाति विनयम्" इति श्लोकम् कण्ठस्थम् श्रावयत ।

६. विद्यायाः प्रशंसाविषये पञ्च वाक्यानि लिखत ।

**७. संस्कृते उत्तरयत**

(क) विद्या किम् ददाति ? (विद्या विनयम् ददाति । )

(ख) दिवा कः न पश्यति ?

(ग) दिवा रात्रौ च कः न पश्यति ?

(घ) कीदृशः नरः पूज्यते ?

**८. रिक्तस्थानम् पूरयत**

(क) विनयात् .................. याति । (पात्रताम्, कुशलताम्)

(ख) किं कुलेन .................. विद्याहीनस्य देहिनः । (विशालेन, ज्ञानेन)

(ग) अकुलीनोऽपि .................. देवैरपि स पूज्यते ।

(घ) दिवा पश्यति नोलूकः काको नक्तं न पश्यति ।

....... ........................................ ।

**९. परस्परम् मेलयत**

| | |
|---|---|
| (क) पात्रत्वात् आप्नोति | (क) ततः सुखम् |
| (ख) धनात् धर्मम् | (ख) धनम् |
| (ग) रात्रौ उलूकः | (ग) न पश्यति |
| (घ) दिवा काकः | (घ) रसना मधुरा |
| (ङ) मृदुभाषिणः जनस्य | (ङ) पश्यति |

**१०. अनुवादम् कुरुत**

(क) विद्या विनयं ददाति । (ग) नेपालस्य उत्तरदिशि हिमालयः वर्तते ।

(ख) काकः नक्तम् न पश्यति । (घ) सर्वे सुखिनः भवन्तु ।

## निर्देशन

इकारान्त/ उकारान्त पुंलिङ्ग शब्द

१. इकारान्त पुंलिङ्ग शब्दको प्रयोग गएका पाठहरूमा भएको छ । जानकारीका निम्ति सबै विभक्तिका रूप यहाँ दिइन्छ । जस्तै "मुनि" शब्द-

| विभक्ति | एकवचन | द्विवचन | बहुवचन |
|---|---|---|---|
| प्रथमा | मुनिः | मुनी | मुनयः |
| द्वितीया | मुनिम् | मुनी | मुनीन् |
| तृतीया. | मुनिना | मुनिम्याम् | मुनिभिः |
| चतुर्थी | मुनये | मुनिभ्याम् | मुनिभ्यः |
| पञ्चमी | मुनेः | मुनिभ्याम् | मुनिभ्यः |
| षष्ठी | मुनेः | मुन्योः | मुनीनाम् |
| सप्तमी | मुनौ | मुन्योः | मुनिषु |
| सम्बोधन | हे मुने ! | हे मुनी | हे मुनयः |

यसै गरी हरि, कवि, रवि, ऋषि, अतिथि आदि शब्दका रूप चल्दछन् ।

२. उकारान्त पुंलिङ्ग शब्दको रूप पनि खास फरक हुँदैन । जस्तै "बन्धु" शब्द-

| विभक्ति | एकवचन | द्विवचन | बहुवचन |
|---|---|---|---|
| प्रथमा | बन्धुः | बन्धू | बन्धवः |
| द्वितीया | बन्धुम् | बन्धू | बन्धून् |
| तृतीया | बन्धुना | बन्धुभ्याम् | बन्धुभिः |
| चतुर्थी | बन्धवे | बन्धुभ्याम् | बन्धुभ्यः |
| पञ्चमी | बन्धोः | बन्धुभ्याम् | बन्धुभ्यः |
| षष्ठी | बन्धोः | बन्ध्वोः | बन्धूनाम् |
| सप्तमी | बन्धौ | बन्ध्वोः | बन्धुषु |
| सम्बोधन | हे बन्धो | हे बन्धू | हे बन्धवः |

यसै गरी भानु, गुरु, प्रभु, वायु, जन्तु, पशु आदि शब्दका रूप चल्दछन् ।

चतुर्विंशः पाठः

# संख्यावाचकाः शब्दाः

| | | | |
|---|---|---|---|
| एकः | द्वौ | त्रयः | चत्वारः |
| एका | द्वे | तिस्रः | चतस्रः |
| एकम् | द्वे | त्रीणि | चत्वारि |



एकः बालकः ।



एका बालिका ।



एकम् पुष्पम् ।



द्वौ बालकौ ।



द्वे बालिके ।



द्वे पुष्पे ।



त्रयः बालकाः ।



तिस्रः बालिकाः ।



त्रीणि पुष्पाणि ।



चत्वारः बालकाः ।



चतस्रः बालिकाः ।



चत्वारि पुष्पाणि ।



पञ्च हंसाः ।



षट् पिपीलिकाः ।



सप्त पत्राणि ।



अष्टौ पुष्पाणि ।



नव पुष्पाणि ।



दश पुष्पाणि ।*

## अभ्यासः

**१. शुद्धम् उच्चारयत**

द्वे बालिके । चतस्रः बालिकाः । त्रीणि पुष्पाणि ।

**२. अशुद्धस्थले शुद्धम् कृत्वा लिखत**

द्वौ पुष्पे । सट् पुष्पाणि । चत्वारि पुष्पाणी ।

**३. संस्कृते लिखत**

पाँच, छ, सात, आठ, नौ, दश ।

**४. परस्परम् मेलयत**

| | |
|---|---|
| (क) त्रयः | (क) पुष्पाणि |
| (ख) द्वौ | (ख) बालकाः |
| (ग) त्रीणि | (ग) बालिकाः |
| (घ) चतस्रः | (घ) बालकौ |

* पञ्च, षट्, सप्त, अष्टौ, नव, दश यी सङ्ख्या वाचक शब्दका तीन लिङ्गमा समान रूप हुन्छन् ।

५. रिक्तस्थानम् पूरयत

(क) ..................... बालकाः । (चत्वारः, चतस्रः, चत्वारि)

(ख ..................... पुष्पाणि । (त्रीणि, तिस्रः, त्रयः)

(ग) ..................... पुष्पम् । (एकम्, एकः, एका)

(घ) ..................... बालकाः । (त्रयः, तिस्रः, त्रीणि)

६. नेपालीभाषायाम् अनुवादम् कुरुत

(क) चत्वारः बालकाः खेलन्ति ।

(ख) तिस्रः बालिकाः गच्छन्ति ।

(ग) त्वम् त्रीणि पुष्पाणि पश्य ।

(घ) द्वे बालिके पठतः ।

७. संस्कृते अनुवादम् कुरुत

(क) केटाहरूले दसवटा आँप खाए ।

(ख) तीनवटा केराहरू छन् ।

(ग) तिमी दुइटा फल ल्याऊ ।

(घ) हामी चारवटा फूल टिप्छौं ।

# शब्द-भण्डार:

अग्नि: = आगो ।
अङ्क: = काख । १, २, ३ आदि संख्या ।
अङ्गम् = अङ्ग, शरीर ।
अधिकम् = धेरै
अधिकरणम् = आधार, सप्तमी विभक्ति जनाउने एक कारक ।
अपादानम् = पञ्चमी विभक्ति जनाउने एक कारक ।
अभिनय: = नक्कल । नाटकमा गरिने हाउभाउ ।
अवलोकनम् = हेर्नु ।
अभिव्यञ्जकम् = बताउने, बुझाउने ।
अमृतम् = अमृत ।
अल्पविराम: = शब्द वा शब्दसमूहका पछिल्तिर लाग्ने एक चिह्न, कमा (,) ।
अश्व: = घोडा ।
आकाशम् = आकाश ।
आधारभूतम् = आधार वा आडको रूपमा रहेको ।
आम्र = आँप
आविष्कार: = नयाँ कुराको खोजी, आविष्कार ।
आयतनम् = फैलावट । आकाशको परिधि । चार समकोण भएको क्षेत्र ।
आयातम् = बाहिरबाट ल्याइएको वस्तु । त्यस्तो वस्तु ल्याउने काम ।
आधारितम् = आधारमा रहेको ।
आसन्नकोण: = ज्यामितिमा एक कोणसँग जोडिएको अर्को कोण ।
उत्तरा = उत्तर दिशा ।
उत्पादनम् = उब्जाउनु ।
उत्साह: = जाँगर, हौसला ।
उद्देश्यम् = लक्ष्य, उद्देश्य ।
उपकरणम् = औजार, साधन ।
उपचार: = इलाज, सेवा ।
उपवनम् = बगैंचा

उपानत्     = जुत्ता ।
उपाय:     = जुक्ति, प्रयत्न .
उपयोगिता   = उपयोगी हुनु, उपयोगमा आउनु ।
उरूकम्     = प्यान्ट ।
उपत्यका    = पहाडको काखमा बसेको सम्म जमिन, ब्याँसी ।
उष्ट्र:     = ऊँट ।
ऋतु:      = मौसम । दुई-दुई महिनाको समय विभाजन (वसन्त, ग्रीष्म आदि)
ओदन:     = भात
ऐतिहासिकम् = इतिहासमा आधारित, इतिहाससम्बन्धी ।
औषधम्,    = ओखती
कठिनम्     = कडा, साह्रो, गाह्रो ।
कठोर:     = कडा, साह्रो ।
कण:      = ढुंगा, अन्न आदिको टुक्रा । कनिका, पानीको थोपा ।
कथा      = गद्यमा लेखिएको आख्यानात्मक साहित्यिक विधा, कहानी ।
कदली     = केरा ।
करणम्     = साधन । तृतीया विभक्ति जनाउने एक कारक, करण ।
कर्गजम्    = कागज ।
कविता     = छन्द वा लयमा आधारित साहित्यिक विधा, काव्य ।
कवि      = कवि ।
कक्षा      = दर्जा, श्रेणी ।
कर्म, कार्यम् = काम ।
काल:     = समय ।
कीटाणु:    = सूक्ष्म कीरा, जसले रोग उत्पन्न गर्छ ।
कुक्कुट:    = कुखुरो
क्रियापदम्   = क्रिया जनाउने पद, क्रिया ।
कोण:     = कुनु । दुई दिशाबाट आएका सरल रेखा जोडिने ठाउँ ।
खग:      = चरो
गज:      = हात्ती

गणितम् = संख्यासम्बन्धी विद्या, गणित, हिसाब ।
गन्धः = बास्ना
गर्दभः = गदाहा ।
गायकः = गाइने, गायक ।
गुणनम् = एक अङ्कले अर्को अङ्क गुन्ने काम, गुणा ।
गुणाङ्कः = गुणा गरिने संख्या ।
गोपालः = गोठालो ।
गोधूमः = गहुँ
गोलाकारः = गोलो आकार भएको, बाटुलो ।
गोष्ठः = गोठ ।
गोष्ठी = सभा, गोष्ठी
ग्रामः = गाउँ ।
घटः = घडा, गाग्रो ।
घाताङ्कः = गुणन गर्दा निस्केको संख्या, गुणनफल ।
चतुरः = चलाख, बाठो ।
चारित्रिकम् = चरित्रसम्बन्धी, चरित्रप्रधान ।
जनकः = जन्म दिने, बाबु ।
जननी = आमा ।
जन्मभूमिः = जन्मेको ठाउँ वा देश, मातृभूमि ।
जातिः = समूह, जात, जाति ।
जिज्ञासा = जान्ने इच्छा ।
जीवनचक्रम् = चक्रजस्तो जीवन, बराबर परिवर्तन भइरहने जीवनको क्रम ।
जीवनी = जीवनमा गरेका कामको विवरण, जीवनचरित्र ।
ज्यामितिः = सतहको क्षेत्रफल नाप्ने गणित, रेखागणित ।
ज्यामितीयम् = ज्यामितिसम्बन्धी ।
तक्रम् = मोही ।
तण्डुलः = चामल ।
तटम्, तटः = तीर, किनारा ।

तापः = तातोपन, गर्मी ।

तापक्रमः = तातोपन घट्ने वा बढ्ने प्रक्रिया ।

तारका = तारा ।

तैलम् = तेल ।

दक्षिणा = दक्षिण दिशा । संमानका लागि दिइने द्रव्य ।

दशांशः = दश खण्डको एक खण्ड ।

दीर्घः = लामो । उच्चारणमा बढी समय लाग्ने स्वर ।

दुर्घटना = अपर्झट भएको नराम्रो घटना । हानि-नोक्सानी, विनाश ।

दोषः = खोट ।

द्वारम् = ढोका ।

द्वीपः = टापू ।

धरणिः, धरणी, धरा = पृथ्वी, धर्ती ।

धरातलम् = सतह, पृथ्वी ।

धान्यम् = धान ।

धार्मिकम् = धर्मसम्बन्धी, धर्मप्रधान ।

ध्वनिः = शब्द, आवाज । काव्यको आत्मा ध्वनि हो भन्ने साहित्यिक सिद्धान्त ।

नदी = नदी ।

नाम = नाउँ ।

निबन्धः = कल्पनात्मक वा वर्णनात्मक साहित्यिक गद्य लेख ।

निपातः = व्याकरणमा एक प्रकारको अव्यय शब्द ।

नियमः = सबैले पालन गर्न व्यवस्था गरिएको सिद्धान्त, आचरणसंहिता, नियम ।

निरीक्षणम् = हेर्नु, निरीक्षण ।

निर्जीवः = जीव वा प्राण नभएको ।

नीतिः = कुनै समाज वा समूहका निम्ति तोकिएको आचरण, कार्य सम्पादन गर्दा अँगालिने, आधारभूत सिद्धान्त । नियम ।

नैतिकम् = नीतिसम्वन्धी, नीतिप्रधान ।

न्याय: = इन्साफ, न्याय । एक दर्शनशास्त्र ।
पदम् = शब्द, पद ।
पदयोग: = पदहरूको जोड वा मेल ।
पदसङ्गति: = पदहरूको सङ्गति वा मेल ।
पदविच्छेद:, पदवियोग = पदहरू नजोडी लेख्नु ।
पदार्थ: = पद वा शब्दहरूको अर्थ । देख्न वा बुझ्न सकिने रूप, आकार भएको वस्तु ।
पद्यम् = छन्दमा रचिएका चार पाउको श्लोक, पद्य ।
पर्वत: = पहाड, पर्वत ।
पशुपति: = पशुका स्वामी, पशुपतिनाथ ।
पश्चिमा = पश्चिम दिशा ।
पाचक: = भान्से ।
पाचनक्रिया = खाएको वस्तु पेटमै पकाउने क्रिया ।
पादवस्त्रम् = मोजा ।
पारदर्शकम् = छर्लङ्ग देखिने, सफा ।
पारिवारिकम् = परिवारसम्बन्धी
पितामह: = हजुरबा ।
पितामही = हजूरआमा ।
पुराणम् = सृष्टिदेखिका सम्पूर्ण घटना बताउने ग्रन्थ ।
पितृव्य: = काका ।
पितृव्या = काकी ।
पूर्णविराम: = वाक्य पूरा भएपछि प्रयोग गरिने चिह्न ( । ) ।
पूजक: = पुजारी ।
पुत्री = छोरी ।
पृथ्वी, पृथिवी = भूमि, धर्ती ।
पोषणम् = पुष्ट गर्नु, पोसिलो पार्नु ।
पौराणिकम् = पुराणसँग सम्बन्धित ।
पूर्वा = पूर्व दिशा ।

प्रकार: = किसिम, भेद ।
प्रकाश: = उज्यालो । आलोक, ज्योति ।
प्रबन्ध: = बन्दोबस्त, व्यवस्था । विचारप्रधान निबन्ध ।
प्रदूषणम् = दूषित पार्नु । रोगव्याधि फैलाउने तत्त्व सर्नु ।
प्राकृतिकम् = प्रकृतिसम्बन्धी ।
प्रामाणिकम् = प्रमाण सम्पन्न ।
प्रवेश: = भित्र जानु, पस्नु । भर्ना हुनु ।
प्रवेशपत्रम् = परीक्षा आदिमा प्रवेश गर्ने अधिकार दिने प्रामाणिक कागज ।
प्राणी = प्राण भएको व्यक्ति वा जीव-जन्तु ।
प्रावारकम् = कोट ।
बालश्रम: = केटाकेटीलाई मजदूरीमा लगाउने काम ।
बिन्दु: = थोपा । शून्य । बिन्दु ।
बीजम् = बीउ ।
बीजगणितम् = अक्षर वा अङ्कको प्रतीकद्वारा कुनै राशि पत्ता लगाउने गणितको एक शाखा ।
भक्तम् = भात ।
भविष्यत् काल: = पछि हुने समय ।
भाग: = छुट्याउनु, विभाजन । अंश, खण्ड । गणितमा कुनै राशिलाई खण्ड खण्डमा बाँड्ने प्रक्रिया ।
भाजक: = भाग लिने संख्या ।
भाज्यम् = भाग लगाइने । भाजकले भाग गरिने संख्या ।
भिन्नम् = भाँचिएको, टुक्रा पारिएको । सग्लो राशिलाई टुक्रा-टुक्रामा बाँडी निकाल्ने हिसाब ।
भूगोल: = गोलाकार भूमि, भूमण्डल ।
भूतकाल: = बितेको समय ।
भौगोलिकम् = भूगोलसम्बन्धी ।

भौतिकम् = पञ्च महाभूत (पृथिवी, जल, तेज, वायु र आकाश) बाट बनेको वा त्यससँग सम्बन्धित ।

मञ्च = मेच

मठ: = मठ ।

मधु = मह ।

मरुभूमि: = पानी नभएको सुखा जमिन या क्षेत्र ।

मसीधानी = मसी राख्ने भाँडो, मसिनी ।

महाद्वीप: = ठूलो टापू । पुराणमा पृथ्वीका जम्बू, प्लक्ष आदि सात विभाग ।

महिष: = राँगो ।

मांसम् = मासु

मांसपेशी = मासुको लोला, मांसपिण्ड । मासुको टुक्रा ।

मातुल: = मामा

मातुलानी = माइजू ।

माध्यमिक = माझको ।

माध्यमिक-विद्यालय: = प्राथमिक र निम्न माध्यमिकभन्दा माथिल्लो, उच्च माध्यामिक भन्दा तल्लो तहको (९-१० कक्षाको) विद्यालय ।

मार्ग: = बाटो ।

मास:, मासम् = महिना ।

मिश्रणम् = मिसाउनु, मिसावट ।

मुद्रा = रुपियाँ, सिक्का ।

मुहूर्त: = एक क्षण । साइत ।

मृत्तिका = माटो ।

मेघ: = बादल ।

युतकम् = कमीज, सर्ट ।

योग: = जोड, मेल ।

योगफलम् = जोड्दा निस्कने अङ्क ।

रजक: = धोबी ।

राजधानी = मुख्य सहर, राष्ट्रिय सदरमुकाम ।
राजमुकुटम् = राजाको शिरपेच ।
राशि: = थुप्रो, समूह । अङ्क या संख्या । मेष, वृष आदि राशि ।
रूपकम् = एक प्रकारको दृश्यकाव्य, एकलाई अर्कोमा आरोप गर्दा पर्ने एक अलङ्कार ।
रूपान्तरम् = अर्को रूप । एक रूपबाट अर्कोमा लैजानु, अनुवाद गर्नु ।
रेखा = धर्को, डोरो । आकार । रूप ।
रेखागणितम् = रेखाको माध्यमले सिद्धान्त प्रतिपादन गरिने गणितको एक भेद ।
रेखात्मकम् = रेखा भएको ।
रेखाङ्कनम् = रेखा अङ्कित गर्नु, खाका तयार पार्नु ।
रोग: = शरीरमा हुने विकृति, व्यथा, बिमारी ।
लक्ष्यम् = उद्देश्य ।
लाभदायकम् = लाभ वा फाइदा पुऱ्याउने, लाभप्रद ।
लिङ्गम् = स्त्री पुरुष छुट्याउने शरीरको चिह्न । लक्षण । व्याकरणमा पुरुष, स्त्री र नपुंसकको भेद छुट्याउने शब्द भेद ।
वक्र:, वक्रम् = बाङ्गो ।
वृत्तम् = बाटुलो घेरा । बराबर दूरीमा रही वरिपरि रेखाले घेरिएको क्षेत्र ।
वैज्ञानिकम् = विज्ञानसम्बन्धी ।
वैज्ञानिक: = विज्ञानको ज्ञाता वा प्रयोक्ता ।
वैद्य: = आयुर्वेदअनुसार रोगको उपचार गर्ने व्यक्ति ।
व्यायाम: = शरीर स्वस्थ राख्न गरिने श्रम, कसरत ।
व्रतबन्ध: = द्विजातिको एक संस्कार, उपनयन ।
शतांश: = सय खण्डको एक खण्ड ।
शय्या = ओछ्यान ।
शारीरिकम् = शरीरको, शरीरसम्बन्धी ।
शाटी, शाटिका = सारी ।
शिरस्त्रम् = टोपी ।
शेष: = बाँकी रहेको वस्तु । गणितमा भाग गर्दा बचेको अङ्क ।

श्यामपट्टः = कालोपाटी ।
श्लोकः = छन्दमा रचिएको चार पाउको रचना, पद्य ।
संख्या = गणना, गन्ती, अङ्क ।
संयोगः = जोड, मेल ।
सभ्यता = सभ्य वा शिष्ट गुण वा भाव, उन्नति वा संस्कृतिको उच्च स्थिति ।
समकोणः = रेखागणितमा ९० अंश भएको कोण ।
समीकरणम् = ज्ञात राशिको मदतले अज्ञात राशि निकाल्ने गणितीय प्रक्रिया ।
समुदायः = समूह, समाज ।
सर्वनाम = नामको सट्टा आउने शब्द (अयम्, इयम्, इदम् आदि)
समतलम् = सम्म ठाउँ ।
संस्था = सार्वजनिक संगठन वा सभा, सङ्घ ।
संयोज्यम् = मिलाइएको वा मिलाउन योग्य ।
सजातीयः = एउटै जात वा वर्गको ।
सजीवः = जीव वा प्राण भएको, जिउँदो ।
सरलीकरणम् = सरल बनाउने प्रक्रिया ।
सरलीकृतम् = सरलीकरण गरिएको
सर्पः = सर्प ।
सहयोगः = मद्दत, सहायता ।
सहायकम् = सहायता गर्ने, मद्दत पुऱ्याउने ।
सहायता = मद्दत, सहयोग ।
सांस्कृतिकम् = संस्कृतिसम्बन्धी ।
सामाजिकम् = समाजको, समाजसम्बन्धी ।
सामूहिकम् = समूहको, समूहसँग सम्बन्धित ।
साम्राज्यम् = धेरै साना राज्य गाभेर शासन गरिएको ठूलो राज्य ।
साक्षी = घटनालाई प्रत्यक्ष देख्ने व्यक्ति, साछी ।
सीमितः = सीमाभित्रको, व्यापक वा ठूलो दायरा नभएको ।
सुगन्धः = मीठो बास्ना, सुवास ।

सुरक्षा = राम्रो रेखदेख, बचावट ।
सूप: = दाल ।
सेविका = नोकर्नी ।
सौन्दर्यम् = सुन्दरता ।
सौर्य (र) मण्डलम् = सूर्यको प्रदक्षिणा गर्ने ग्रह-नक्षत्र आदिको समुदाय, सौरपरिवार ।
स्तुति: = प्रार्थना, स्तोत्र ।
स्थानीयम् = त्यसै स्थानको, स्थानसम्बन्धी ।
स्वयंसिद्धम् = आफैँ सिद्ध वा सफल भएको ।
स्वयंसेवक: = आफ्नै इच्छाले सेवा गर्ने व्यक्ति ।
स्रोत: = प्रवाह, मुहान ।
स्वास्थ्यम् = स्वस्थ वा निरोगी अवस्था, आरोग्य ।
स्वेदकम् = सुइटर ।
हरिण: = मृग ।
हानिकारकम् = हानि पुऱ्याउने ।
ह्रस्व: = छोटो । व्याकरणमा थोरै समयमा उच्चारण गरिने मात्रा ।
क्षेत्रम् = खेत ।
क्षेत्रफलम् = गणितमा लम्बाइ र चौडाइको गुणाबाट निस्कने संख्या ।
त्रिकोण: = तीन सरल रेखाबाट बनेको समतल चित्र, त्रिभुज ।
त्रिभुज: = तीन सरल रेखा मिली बनेको कोण, त्रिकोण ।
ज्ञानेन्द्रियम् = विषयवस्तुको ज्ञान गराउने (नाक, कान, आँखा, जिभ्रो र छाला यी पाँच) इन्द्रिय ।

